संस्कृतभाषाप्रचाराय स व्याकुलो भवेत् ?

किञ्च-विवाहादिधार्मिककृत्येषु यदि राजशक्तेः स्वल्पोपि हस्तक्षेपो भवति तर्हि धार्मिकपण्डितसमाजः सहसैवाऽग्निशर्मा भवति । उचितं चाप्येतद्धर्मप्राणानां भारतीयानाम् । किन्त्वद्यत्वे सर्वस्यापि धर्मस्य मूलभूतायाः संस्कृतभाषायाः सर्वसंहारे प्रसक्तेऽपि धर्मप्राणाः पंडितपुरन्दरास्तद्रक्षणाय सर्वथा परस्य परस्य मुखमवेक्षन्ते इत्यहो बलवती भवितव्यता । वेदाऽक्षरश्रवणाधिकारादपि येऽस्माभिश्च्याविताास्तेषामुपर्येव सांप्रतं वेदरक्षाया भारोऽस्यस्माभिर्विनिहित इत्यहो विरोधालंकारस्य व्यापकत्वम् । सर्वविषयेषु निर्जीवानामपि संस्कृतपण्डितानां नाडी धर्मविषयेष्वद्यापि किञ्चित्स्फुरतीति जाने । किन्त्वधुना धर्ममूलस्य निर्मूलनप्रसङ्गेऽपि यदि निश्चेष्टता स्यात्तर्हि किमनेन बुध्यताम् ?

ननु अन्यभाषासमर्थकस्य राजतन्त्रस्य संमुखे धार्मिकपण्डितानां कियती वा संस्कृतप्रचारे शक्तिरिति चेत्, यावती शक्तिस्तावत्किं पण्डितैः प्रयतितम् ? धर्मस्थानानां देवमन्दिराणां च रक्षणं यथा वयं राजप्रातिकूल्येऽपि स्वजीवनध्येयं मन्यामहे तथा किं दृष्टिर्धर्मभाषायामस्यां देववाण्यामस्माकं निपतति ? यानि किल कार्याणि राजायत्तानि, राजसाहाय्यं तेष्वपेक्षितं स्यात् । किन्तु येषु कार्येषु राज्ञा न संबन्धस्तेषु किं भाषासंबन्धिकार्येषु संस्कृतभाषायै दीयतेऽस्माभिरधिकारः ? संस्कृतशिक्षितैर्मौखिके लेख्यव्यवहारे वा किमुपादीयते देववाणी ? गृहे किं व्यवह्रियते संस्कृतम् ? निजौरसपुत्रा भ्रातृव्या वा किं पाठ्यन्ते संस्कृतमेव ? [ सूचकाः सूचयन्ति यत्-शुद्धसंस्कृताध्ययनं दूरे, जीविकार्थं राजभाषाध्ययने-उपभाषा-(सैकिण्डलैंग्वेज) रूपेणापि सेयं वराकी संस्कृतभाषा नोपादीयते संप्रति पण्डितपुत्रैः ] मिथो मिलितेषु संस्कृतज्ञेषु किं प्रचलति संस्कृतेनैव भाषणम् ? अवकाशसमये चित्ताह्लादनाय भाषान्तरमयम् उपन्यासा-(कथाकाव्य)दि यथा प्रणयतः पठ्यते तथा संस्कृतपुस्तकान्युपादीयन्ते कश्चित ? संस्कृते किञ्चिदानन्दजनकमेव वा नास्ति ? नास्ति चेत्कस्यायं दोषः ? साहित्यवृद्धिः कस्य कर्तव्यम् ? धार्मिकमन्दिरेषु धार्मिककृत्येषु च किं संस्कृतस्यैव सर्वथा प्रवर्तितोऽस्माभिर्व्यवहारः ?

सर्वमन्यद्दूरेऽपयातु, येषु स्थानेषु संस्कृतसंरक्षणस्याऽभावे स्वयमस्माकं स्वार्थहानिर्जीवनहानिर्वा प्रसज्यति तेष्वपि किमस्माभिर्वराकी सेयं संस्कृतभाषा संरक्ष्यते नाम ? अन्यप्रमाणापेक्षया प्रत्यक्षस्य सर्वैरपि प्राबल्यमङ्गीक्रियते नूनम् । प्रत्यक्षतो दृश्यते यत्-'राजपूतानाबोर्ड'सदृशीभिः संस्थाभिः सेयं संस्कृतगवी चक्षुषोरस्माकं संमुख एव निर्दयं विशस्यते, धार्मिकैरस्माभिश्चाऽव्याकुलं स्थीयते ! अपि यथाशक्ति निर्वाहितं संस्कृतपण्डितैः स्वकर्तव्यम् ?

अस्तु. एवमिव संस्कृतभाषासेवनविषये सर्वतः प्रसिद्धिमुपगतेऽस्माकं कर्तव्यपालनपाटवे संमुखोपस्थितं शिक्षासंशोधनमिदमति-

तमामवधानेन मननीयम्, नानाप्रान्तेषु शिक्षाव्यवसाय एव जन्म यापितवतां महानुभवशालिनामेव निर्धारणीयं चेति सुस्पष्टमेव। म० म० श्रीगिरिधरशर्मचतुर्वेदसदृशैश्चतुरस्रविद्भिः प्रदर्शितानुपायान्मार्मिकदृष्ट्या विचारयेयुः पाठकमहोदयाः। एभिर्हि बहोः कालात्पुरस्तादयं प्रश्नः सूक्ष्मेक्षिकया न केवलं विचारित एव अपि तु एतद्विषयकविचारान् भारतीयप्रसिद्धप्रसिद्धपण्डितानां सविधे संप्रेष्य संस्कृतशिक्षासम्बन्धे सुनिश्चितं पाठ्यक्रमं निखिलभारतीयसंस्कृतसाहित्यसंमेलनद्वारा निर्धारयितुमाचेष्टितमपि। किन्तु पण्डितदिग्गजानां नैसर्गिकनिमीलिकया यावत्साध्यं संभवि तावदेव निष्पन्नम्। एतत्संशोधनस्य कश्चिदंशो हिन्दुविश्वविद्यालयेनाङ्गीकृत्य कार्यरूपेण प्राचालितोऽपीत्यपि स्मर्यते।

तत्त्वतो विचारणेन सत्यं त्विदं यद्भारते संप्रति संस्कृतशिक्षासंशोधनाधिकारिणो गवेषिता अपि भूयस्तरां विरलायन्त एव, न च सहसा सर्वैर्निर्धारणीया एव। अत एवैवंविधानां समर्थानामेव संमतीः संगृह्य तादृशानामेव समितिः शिक्षामिमां चेत्संशोधयेत्तदा स्यात्किञ्चित्फलम्। अन्यथा-विभिन्नविभिन्नमस्तिष्कशालिनां महाविदुषामधिकसंमत्याऽपि नाभीष्टफललाभसंभावना। शास्त्रपाण्डित्यं वावदूकत्वं वाऽन्यत्, शिक्षोपायपरीक्षकता चाऽन्येति स्थूलस्थूलतमं सत्यम्।

पाठकमहोदयाः! विशेषाङ्कोऽयमङ्कगत एव संप्रति श्रीमताम्। परं दुर्बलयोः स्कन्धयोरुपर्ययमारोपितोऽभूद्भारो नूनम्। अत एव विषयसंकलने, संशोधने, चित्रादीनां निवेशने च यास्त्रुटयः संजाताः, प्राप्तनिबन्धानामप्रकाशने च योऽयमपराधः संवृत्तस्तदर्थमयमहमाबद्धाञ्जलि क्षमामभियाचे, प्रार्थये च--

ददती सुदाक्ष्यदीक्षा-
मुभय१परीक्षासु सफलतां सृजती।
सेयं संस्कृतशिक्षा
सकलसुभिक्षाय जायतां पठताम्॥

भट्टश्रीमथुरानाथशास्त्री।



१-ऐहलौकिकी (प्रसिद्धा), पारलौकिकी (परलोकोपयुक्तसुकृतसंचय-भगवत्तोषणादिरूपा) च

॥ श्रीः ॥

## ❀ सहायकानां नामावली ❀

| | | | | |
|---|---|---|---|---|
| १००) | राजाबलदेवदासजी बिडला | ... | ... | बनारस |
| १००) | पं० रामचन्द्रजी शास्त्री, संस्थापक-संस्कृत-प्रचारक-विद्यालय | | ... | मुंबई |
| ५१) | वैद्य नन्दकिशोरजी भिषगाचार्यः | ... | .... | जयपुर |
| ५१) | स्वामी जयरामदासजी, ,, | ... | ... | ,, |
| ५१) | दीवानबहादुर दीवान कृष्णकिशोरजी, रईस | | ... | लाहौर |
| ५१) | बंसीधरजी वैजनाथजी जालान | ... | ... | कलकत्ता |
| ५०) | पं० शिवदत्तजी शास्त्री | ... | ... | तुमसर |
| ५०) | सेठ रामकृष्ण रामनाथजी | ... | ... | तुमसर, |
| २१) | कन्हैयालालजी तिवाडी पुरोहित एम्० ए० विशारद | | ... | जयपुर |
| १५) | श्रीमान् से० सूरजमलजी नागरमलजी, | ... | ... | रतनगढ |
| १०) | गांगेयनरोत्तम शास्त्री, | ... | .. | कलकत्ता |
| ६) | मणिरामजी वैद्य भिषगाचार्य | .... | ... | रतनगढ |

५) मुद्रादातारः प्रतिवर्षमेवैतत्पत्रस्य सहायका यथा—

| | | | | |
|---|---|---|---|---|
| ५) | बुलाकिरामजी शास्त्री | ... | ... | किशनगढ |
| ५) | एन्० माधव मेनोन | ... | ... | मद्रास |
| ५) | सीताराम शास्त्री | ... | .... | कलकत्ता |
| ५) | हरिहरशास्त्री, | ... | ... | हैदराबाद |
| ५) | वैद्य नन्दकिशोरजी भिषगाचार्यः | ... | ... | जयपुर |

५८१) रु०



प्रेमप्रकाश इ० प्रेस, जौहरी बाजार जयपुर ।

